## (स्वरूप) आत्मप्राप्ति

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य—
स्तस्यैष आत्मा विवृणुते तनुंस्वाम् ॥

## परमेश्वर स्वरूप

येन शद्बं रसं रूपं गन्धंजानासि राघव ।
तमात्मानं परब्रह्म जानीहि परमेश्वरम् ॥

## ज्ञान स्वरूप

अत्यन्तमलिनोदेहो देहीचात्यन्त निर्मलः ।
असंगोऽहमितिज्ञानशौचमाहुर्मनीषिणः ॥

## परमपदम्

यदा पञ्चावतिष्ठान्ति ज्ञानानिमनसा सह ।
बुद्धिश्च न विचेष्टन्ती तामाहुःपरमांगतिम् ॥

## निर्गुण ( परमात्मा )

एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेतो केवलोनिर्गुणश्च ॥
ग्रहो न तत्रनोत्सर्गश्चिन्ता यत्र न विद्यते ।
आत्मसंस्थंतदाज्ञानमजातिशमतां गतम् ॥

## परब्रह्म

रमन्ते योगिनोऽन्तेच नित्यानंदे चिदात्मनि
इतिरामपदेनासौ परब्रह्माभिधीयते ।

## परमार्थ स्वरूप

ननिरोधोनचोत्पत्तिर्नबन्धो न च साधकः
मुमुक्षुर्न च वैमुक्त इत्येषा परमार्थता ॥

## ब्रह्म

यतोवाचो निवर्तन्ते अप्राप्य मनसा सह
आनंदं ब्रह्मणो विद्वान् न बिभेति कदाचन ॥
रामंविद्धि परंब्रह्म सच्चिदानंदमद्वयम् ।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ॥
साकारं च निराकारं नेतिनेतीति सर्वदा ।
भेदाभेदविनिर्मुक्तो वर्तते केवलः शिवः ॥

## चिदानंदस्वरूप ब्रह्मप्राप्ति

गुरुशास्त्रं विनात्यंतं गंभिरं ब्रह्मवेत्तिकः ।
अस्य सन्निधि मात्रेण चिदानंदायते तनुः ॥

## परमात्मा प्रणाम

आत्मा सर्वपदातीतश्चिरात्संस्मृतिमागतः ।
दृष्ट्या लब्धासि भगवन् नमस्तेऽस्तु महामते ॥

## तत्त्वज्ञानम्

शब्दजालमहारण्यं चित्तभ्रमणकारणम् ।
अतः प्रयत्नाज्ज्ञातव्यं तत्त्वंज्ञातव्यमात्मनः ॥

## शांभवीमुद्रा ( शिवस्वरूप )

अंतर्लक्ष्या बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा सा शाम्भवीमुद्रा वेदशास्त्रेषु घोषिता ॥

## ईशचिंतनम्

मनसाभक्तिभावेन यदाशंस्य निरन्तरम् ।
स्मरणंसर्वगत्वेन तदेवेश्वरचिन्तनम्

## चित्तलक्षणम्

अचिन्त्याः खलुयेभावा नतांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यत् तच्चित्तस्यखलु लक्षणम् ॥

## भगवान्—षड्गुणैश्वर्य

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयै र्गुणादिभिः ॥

## मायास्वरूपम्

अजामेकांलोहित शुक्लकृष्णां
बह्वीः प्रजाः सृजमानां स्वरूपाम् ।

अजोह्येको जुषमाणोऽनुशेते
जहात्येनांभुक्तभोगामजोऽन्यः ॥

## माया—संसारलीला

आगता ब्रह्मणोमुक्त्या संसारमिहलीलया ।
पुनः ब्रह्मैवसंस्मृत्त्य ब्रह्मण्येव विलीयते ॥

## जीव—शिवस्वरूपम्

देहेवै मोहितो देही जीवइत्यभिधीयते ।
देहहीनः सएवापि शिवः प्रोक्तोमनीषिभिः ॥

## मनोपदेश

साकारमनृतंविद्धि निराकारंच निश्चलम् ।
एतत्तत्त्वोपदेशेन न पुनर्भवसंभवः ॥

## बंधमोक्षकारणम्

मनएवमनुष्याणां कारणं बन्धमोक्षयोः
बंधायविषयासंगं मुक्त्यै निर्विषयंस्मृतम् ।

## शुद्धाशुद्ध मन

मनोहि द्विविधंप्रोक्तं शुद्धंचाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धंकामविवर्जितम् ॥

## सद्गुरु सेवा

यस्यदेवे पराभक्ति र्यथा देवे तथा गुरौ ।
तस्यैते कथिताह्यर्थाः प्रकाश्यन्ते महात्मनः ॥

## सद्गुरु योग्यता

तस्माद्गुरुं प्रपद्येत जिज्ञासुःश्रेयउत्तमम् ।
शाब्देपरे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥

## मनुष्य कर्तव्य

यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः ।
आदौज्ञानप्रसिद्ध्यर्थं कृतघ्नत्वाऽपनुत्तये ॥
मृत्योर्बिभेषि किंमूढ भीतंमुञ्चतिकिंयमः ।
अजातं नैव गृण्हाति कुरुप्रयत्नमजन्मनि ॥

## आचार्य कर्तव्य

यद्यदाचरति श्रेष्ठः स्तत्तदेवेतरोजनः ।
सयत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

## तत्व ज्ञानाधिकारी

महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
पारं दुःखोदधेर्गन्तुं तरयावन्नाभिद्यते ॥
एषसर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यतेत्त्वग्र्ययाबुद्ध्या सूक्ष्मयासूक्ष्मदर्शिभिः ॥

## ज्ञानिलक्षणम्

अक्रोधवैराग्यजितेन्द्रियत्वं
क्षमादया सर्वजनप्रियत्वम् ।
निर्लोभदाता भयशोकहर्ता
ज्ञानिगुणानां दशलक्षणानि ॥

## महात्मा पुरुष लक्षणम्

परस्य भाव कर्माणि न प्रशंसेन्नगर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥

## विद्वद्लक्षणम्

यथानद्यः स्पंदमानाः समुद्रेऽस्तंगच्छंति नामरुपेविहाय ।
तथाविद्वान्नामरूपाधिमुक्तः
परात्परं पुरुषमुपैतिदिव्यम् ॥

## सुगृहलक्षणम्

वनेषुदोषाः प्रभवन्ति रागिणां
गृहेषु पञ्चेन्द्रियनिग्रहश्च ।
अकुत्सिते कर्मणियः प्रवर्तते
निवृत्तरागस्यगृहं तपोवनम् ॥

## मूर्खस्य लक्षणम्

सर्वेब्रह्म वदिष्यन्ति संप्राप्तेतुकलौयुगे ॥
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः ॥

## सद्विद्या प्राप्ति साधनम्

श्रवणं मननंध्यानं विद्यायाः साधनत्रयम् ।
अज्ञानं संशयो भ्रान्ति रित्येतेषां निवर्तकम् ॥

## माला–जपमंत्र

हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेतियन्मंत्रं जीवोजपति सर्वदा ॥

## जपमंत्र

ध्यायेच्च मनसा मंत्रं जिह्वौष्टौ न विचालयेत् ।
न कंपयेच्छिशे ग्रीवे दन्तान्नैव प्रकाशयेत् ॥

## जप–हिंदि दोहा

माला तो करमे फिरे जिभ्या फिरे मुख माहि ।
मनतो दाहिदिश फिरे इहतो सुमरन नाहि ॥
માલા તો હાથમાંજ ફરે જીભ ફરે મુખ માંહી
મન તો ભટકે દશદિશા એતો ખરૂં સુમરન નાહી

## ध्यान स्वरूपयोग

लक्ष्यैकतां समासाद्य निर्विकारतयात्मनि ।
मनसो निश्चलत्वेन स्थितिर्योग इतीर्यते ॥

## राधास्तुतिः

रत्नाकरोति सदनं गृहिणी च पद्मा
किंदेयमस्ति भवते जगदीश्वराय ।

राधांगृहीत्वा मनसा च तुभ्यम्
दत्तंनिजंमन इति तदिदंगृहाण ।

## कृष्णशब्दस्वरूपम्

कृषिर्भूवाचकः शब्दोणश्चनिर्वृतिवाचकः ।
तयोरैक्यं परंब्रह्म कृष्णइत्यभिधीयते ॥

## गीताप्रशंसा

संसार सागरं घोरं तर्तुमिच्छतियोनरः
गीतानावं समासाद्य पारयति सुखेनसः ॥
यत्रयोगेश्वरः कृष्णो यत्रपार्थो धनुर्धरः ।
तत्रश्रीर्विजयो भूति र्ध्रुवा नीतिर्मतिर्मम ॥

( પ્રજ્ઞાવિવર્ધન કાર્તિકેય અને હયગ્રીવ સ્તોત્રો ભણવા )

## इति प्रातःस्मरणम्

( સ્નાન કરતી વખતે બોલવાના શ્લોકો )
જલને વંદન કરીને સ્નાન કરવું

ૃષ્ણુદેવને— સ્નાનવિધિ

गंगेच यमुनेचैव गोदावरि सरस्वति ।
नर्मदे सिंधोकावेरि जलेस्मिन्सान्निधिंकुरू ॥१॥
गंगागंगेतियोब्रूयात् योजनानांशतैरपि ।
मुच्यते सर्व पापेभ्यो विष्णुलोकं सगच्छति ॥२॥

मातःशैलसुता सपत्नीवसुधा श्रृंगारहारावली ।
स्वर्गारोहण वैजयन्ति भवतीं भागीरथि प्रार्थये ॥३॥

पापापहारि दुरितारितरङ्गधारि
शैलप्रचारि गिरिराजगुहाविदारि ।
झङ्कारकारि परिपादरजोपहारि
गाङ्गंपुनातु सततं शुभकारिवारि ॥४॥

गङ्गासिन्धु सरस्वती च यमुना गोदावरी नर्मदा
कावेरीसरयू महेन्द्रतनया चर्मण्वतीवेदीका ।
क्षिप्रावेत्रवती महासुरनदीं ध्याताजया गण्डकी
पूर्णापूर्णजलैः समुद्रसरिता कुर्यात्सदा मङ्गलम् ॥५॥

स्नानं मनोमलत्यागोयोगश्चेंद्रियरोधनम् ।
अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ॥६॥

## तीर्थक्षेत्र माहात्म्य

अन्यक्षेत्रे कृतं पापं तीर्थक्षेत्रे विनश्यति ।
तीर्थक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ॥

इति स्नानविधि संपूर्ण

સ્નાનવિધિ થયા બાદ અધિકારવશાત્ સંધ્યાવંદનાદિ કરવું ત્યાર બાદ ઇષ્ટદેવનું પૂજન નીચે બતાવેલા વિધિ પ્રમાણે કરવું

सोहम् श्री परमात्मने नमः सोऽहम्

# श्री षोडशोपचार पूजन विधि

( પ્રથમના ત્રણ નામ લેતી વખતે આચમન કરવું ચોથા નામ સમયે પાણી તરભાણામાં છોડવું અને ૫ થી ૨૪ સુધી હાથ જોડવા. )

आचम्य प्राणानाम्य

| | |
|---|---|
| ( १ ) ॐ केशवाय नमः ॥ | ( २ ) ॐ नारायणाय नमः ॥ |
| ( ३ ) ॐ माधवाय नमः ॥ | ( ४ ) ॐ गोविंदाय नमः ॥ |
| ( ५ ) ॐ विष्णवे नमः ॥ | ( ६ ) ॐ मधुसुदनाय नमः ॥ |
| ( ७ ) ॐ त्रिविक्रमाय नमः ॥ | ( ८ ) ॐ वामनाय नमः ॥ |
| ( ९ ) ॐ श्रीधराय नमः ॥ | (१०) ॐ हृषिकेशाय नमः ॥ |
| (११) ॐ पद्मनाभाय नमः ॥ | (१२) ॐ दामोदराय नमः ॥ |
| (१३) ॐ संकर्षणाय नमः ॥ | (१४) ॐ वासुदेवाय नमः ॥ |
| (१५) ॐ प्रद्युम्नाय नमः ॥ | (१६) ॐ अनिरुद्धाय नमः ॥ |
| (१७) ॐ पुरुषोत्तमाय नमः ॥ | (१८) ॐ अधोक्षजाय नमः ॥ |
| (१९) ॐ नारसिंहाय नमः ॥ | (२०) ॐ अच्युताय नमः ॥ |

(२१) ॐ जनार्दनाय नमः ॥ (२२) ॐ उपेंद्राय नमः ॥
(२३) ॐ हरये नमः ॥ (२३) ॐ श्री कृष्णाय नमः ॥

ॐ प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता देवी गायत्री छंदः प्राणायामे विनियोगः यथाशक्ति प्राणायामं करिष्ये (યથાશક્તિ પ્રાણાયામ કરવો.)

## प्रार्थना

श्रीमन्महागणाधिपतये नमः निर्विघ्नमस्तु ॥
सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥
लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥१॥
धुम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥३॥
शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजं ॥
प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥४॥
विनायकं गुरुंभानुं ब्रह्माविष्णुमहेश्वरान् ॥
सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥५॥
आभीप्सितार्थसिद्ध्यर्थं पूजितोयः सुरासुरैः
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥६॥

सर्वेष्वारब्धकार्येषु त्रयाश्त्रिभुवनेश्वराः ॥
देवादिशंतुनः सिद्धिम् ब्रह्मेशानजनार्दनाः ॥७॥

ॐ लक्ष्मीनारायणाभ्यां नमः उमामहेश्वराभ्यां नमः ॥ माता-पितृभ्यो नमः ॥ इष्टदेवताभ्यो नमः । कुलदेवतादिभ्यो नमोनमः ॥

## સંકલ્પ વિધિ

પ્રાર્થનાદિ થયા બાદ નીચે મુજબ સંકલ્પ કરવો.

विष्णुविष्णु श्रीमद्भगवतो महापुरुषस्य विष्णोः
आज्ञया प्रवर्तमानस्य अद्यब्रह्मणो द्वितीयेपरार्धे विष्णुपदे
श्री श्वेतवाराहकल्पे सप्तमे वैवस्वत मन्वन्तरे
अष्टाविंशतितमे कलियुगे कलि प्रथम चरणे
जंबुद्वीपे भरतवर्षे भरतखंडे शालिवाहन शके.
अद्यशुभदिने निष्काम भावे इष्टदेवतानाममंत्रेण
षोडशोपचारैः पूजनं च करिष्ये तथा च
प्रथमं कलशादि पूजनम् षडंग न्यासांश्च करिष्ये.

( હવે આરંભ કરતાં પહેલાં શ્રી ગણપતિનું ધ્યાન કરવું. )

श्री गणपतिध्यानं,

प्रथमं श्रीगणपतिध्यानं कृत्वा

वक्रतुंड महाकाय सूर्यकोटिसमप्रभ
निर्विघ्नं कुरुमेदेव शुभकार्येषु सर्वदा ॥
॥ निर्विघ्नमस्तु ॥

## षडंगन्यास विधि

ॐ श्री इष्टदेवताभ्योनमः हृदये.

હૃદય ઉપર જમણો હાથ મુકવો.

ॐ श्री इष्टदेवताभ्योनमः शिरसि.

મસ્તક ઉપર જમણો હાથ મુકવો.

ॐ श्री इष्टदेवताभ्योनमः शिखायैवषट्

શિખા એટલે ચોટલીના ઊગમ સ્થાન ઉપર જમણો હાથ મુકવો.

ॐ श्री इष्टदेवताभ्योनमः कवचायहुम्.

(બન્ને હાથના તલોવડે આખા શરીર ઉપર કવચ ધારણ કરવાની માફક મુદ્રા કરવી.)

ॐ श्री इष्टदेवताभ्यो नमः नेत्रत्रयाय वौषट् ।

તર્જની તથા અનામિકાની આંગળીનાં અગ્ર ભાગો બન્ને નેત્ર ઉપર મુકવા તથા મધ્ય આંગળી કપાળની મધ્યમાં (ભ્રુકુટીએ) અડાડવી.

ॐ श्री इष्टदेवताभ्यो नमः अस्त्रायफट् इति दिग्बंधः

(ડાબી હથેલી ઉપર જમણા હાથની મધ્ય, અનામિકા અને કનિષ્ઠિકા એ ત્રણ અંગુલિથી તાળી પાડવી

અને ચિપટી વગાડતાં મસ્તકની ચારે બાજુ ઉપર જમણા હાથની પ્રદક્ષિણા કરવી. આ મુજબ બે વખત કરવું.

## કળશ પૂજન

કળશને નમન કરવું કળશ ઉપર હાથ મૂકવો તથા નીચે મુજબ મંત્ર ભણી પ્રાર્થના કરવી.

कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाःस्मृताः ॥
ॐ श्री कलशदेवताभ्यो नमः ।
गंधाक्षत पुष्पं तुलसीपत्रं समर्पयामि ॥

ગંધ પુષ્પ, અક્ષત, તુલસી વિગેરેથી કળશનું (વરૂણદેવનું પૂજન કરવું.

घेनु मुद्रां प्रदर्शयेत् ( ધેનુ મુદ્રા કરવી )

## શંખ પૂજાનો વિધિ.

અધિકાર વશાત શંખની પૂજા કરવી. શંખની પ્રાર્થનાનો મંત્ર

त्वं पुरा सागरोत्पन्नो विष्णुनाविधृतः करे ।
नमितः सर्वदेवानां पांचजन्य नमोस्तुते ॥

ॐ श्री शंखदेवताभ्यो नमः ॥ गंधपुष्पं तुलसीपत्रं समर्पयामि.

શંખને સ્નાન કરાવી ગંધ તુલસી, પુષ્પ ઈત્યાદિ ચઢાવવાં शंख मुद्रां प्रदर्शयेत् ( શંખ મુદ્રા કરવી. )

## घंटानी पूजानो विधि.

प्रार्थनाः—आगमार्थंतु देवानां गमनार्थंतु रक्षसाम्

कुरु घंटे रवं तत्र देवतार्चन सिद्धये ॥

घंटायै नमः सर्वोपचारार्थे गंध अक्षत

पुष्पं, तुलसीपत्रं समर्पयामि ॥

ઘંટાને સ્નાન કરાવી ગંધ અક્ષત, ફુલ, તુલસી આદી ચઢાવવું.

घंटामुद्रां प्रदर्शयेत् ॥ घंटानादं कुर्यात् ॥

ઘંટાની મુદ્રા કરી તેને વગાડવી.

## दीप पूजानो विधि.

ઘીનો અગર શક્તિ ના હોય તો તેલનો દીવો સળગાવવો અને તેનું ધ્યાન કરવું.

### દીપધ્યાન મંત્ર

शुभं कुरुत्वं कल्याणं आरोग्यं धनसंपदम्

शत्रुबुद्धिविनाशाय दीपोज्योति र्नमोस्तुते ॥

दीपदेवताभ्योनमः गंध, अक्षत पुष्पं समर्पयामि ॥

આ મંત્ર ભણી દીપકને ગંધ અક્ષત અને ફુલ વિગેરે ચઢાવવાં.

## स्थानशुद्धि तथा देहशुद्धिनो विधि.

શંખમાં પાણી લેવું અગર કલશમાંથી પાણી લઈ ફુલવતી આજુબાજુ સર્વ જગા ઉપર અને પોતાના શરીર ઉપર પણ છાંટવું તે સમયે નીચે પ્રમાણે મંત્ર ભણવો.

मंत्र—

अपवित्रः पवित्रोवा सर्वावस्थांगतोऽपिवा।
यः स्मरेत् पुंडरीकाक्षं सबाह्याभ्यंतरं शुचिः ।।
॥ सर्वं शुचि ॥

( પંચાયતનાદિ દેવતાનું ધ્યાન સ્થિરચિત્તે કરવું. )

अथध्यानम् ( पंचायतननुं )

( १ ) श्री विष्णु—

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगन सदृशं मेघवर्णं शुभांगम्
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यम्
वंदेविष्णुं भवभयहरं सव लोकैक नाथम्

( २ ) श्री शिव—

ध्यायेन्नित्यं महेशं रजतगिरिनिभंचारुचंद्रावतंसम् ॥
रत्नाकल्पोज्वलांगं परशुमृगवराभितिहस्तं प्रसन्नम् ॥
पद्मासीनं समंतात् स्तुतममरगणैर्व्याघ्र कृत्तिं वसानम् ॥
विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम्.

( ३ ) श्री गणपति—

एकदंतं शूर्पकण गजवक्त्रं चतुर्भुजम् ।
पाशांकुशधरं देवं ध्यायेत्सिद्धि विनायकम् ॥

(૪) श्री सूर्यनारायण—

ध्येयः सदा सवितृ मंडल मध्यवर्ती

नारायणः सरसिजासनसन्निविष्टः

केयूरवान्मकरकुंडलवान् किरीटी

हारी हिरण्मयवपुर्धृतशंखचक्रः ॥

(૫) श्री देवी—

विद्युद्दामसमप्रभां मृगपतिस्कंधस्थितां भीषणाम् ॥

कन्याभिः करवाल खेटविलसद्धस्ताभिरासेविताम् ॥

हस्तैश्चक्रदरालिखेटविशिखांश्चापं गुणं तर्जनीम् ॥

बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजेत् ॥

ઇતિશ્રી વિષ્ણુપંચાયતનાદિ ધ્યાનમ્ श्री इष्ट देवताभ्योनमः ध्यायामि. (આ મુજબ પંચાયતનનું કિંવા પોતાના ઇષ્ટ દેવતાનું એક ચિત્તથી ધ્યાન કરવું)

## षोडशोपचार पूजन विधि

ॐ श्री इष्ट देवताभ्यो नमः આ નામ મંત્ર ભણીને પૂજન કરવું. અગર પોતાના જે ઇષ્ટ દેવ હોય તેનું નામ લઈ પૂજન કરવું.

**आवाहनम्:—**

ॐ श्री इष्टदेवताभ्यो नमः आवाहनार्थे अक्षत, पुष्प तुलसीपत्रादि समर्पयामि.

( જે ઈષ્ટદેવની મૂર્તિ કિંવા ફોટો હશે તેની સામે પૂર્વાભિમુખ અગર ઉત્તરાભિમુખ બેસી અક્ષત, ફુલ, તુલસીપત્ર ઈત્યાદિ તેને અર્પણ કરવાં. બાદ મૂર્તિને તરભાણામાં મુકવી ).

**आसनम्ः—**

ॐ श्री इष्टदेवताभ्यो नमः आसनार्थे अक्षत, गन्ध पुष्पं, तुलसीपत्रादि समर्पयामि.

મૂર્તિ કિંવા ફોટાને મુકવાની જે જગા ઠરેલી હોય તે જગા સ્થાનના આસન ઈત્યાદિની સાફ સફાઈ કરવી તથા આસન ઉપર ગંધ, અક્ષત, ફુલ તુલસી વિગેરે ચઢાવવાં.

**पाद्यम्—**

ॐ श्री इष्टदेवताभ्यो नमः पादयोः पाद्यं समर्पयामि.

મૂર્તિ આદિ પર જલ ચઢાવવું,

**अर्घ्यम्—**

ॐ श्री इष्टदेवताभ्यो नमः हस्तयोः अर्घ्यं समर्पयामि.

મૂર્તિ આદિ પર ગંધ, અક્ષત, ફૂલ જલમાં ભેગાં કરીને ચઢાવવાં.

**आचमनीयम्—**

ॐ श्री इष्टदेवताभ्यो नमः आचमनीयं समर्पयामि.

શુદ્ધ પાણી ચઢાવવું.

**स्नानम्—**

ॐ श्री इष्टदेवताभ्यो नमः स्नानं समर्पयामि.

ચોકખું પાણી ચઢાવવું,

## पंचामृत स्नान तथा पूजानो विधि.

(१) दुग्धम्:—

ॐ श्री इष्टदेवताभ्यो नमः पयस्नानं समर्पयामि.

દુધ ચઢાવવું.

(२) दधिः—

ॐ श्री इष्टदेवताभ्यो नमः दधिस्नानं समर्पयामि.

દહિં ચઢાવવું,

(३) घृतम्:—

ॐ श्री इष्टदेवताभ्यो नमः घृतस्नानं समर्पयामि.

ઘી ચઢાવવું.

(४) मधुः—

ॐ श्री इष्टदेवताभ्यो नमः मधुस्नानं समर्पयामि.

મધ ચઢાવવું.

(५) शर्कराः—

ॐ श्री इष्टदवताभ्यो नमः शर्करास्नानं समर्पयामि.

સાકરનું પાણી અથવા સાકર ચઢાવવી.

## चंदनना स्नाननो विधि.

(६) गंधः—

ॐ श्री इष्टदेवताभ्यो नमः गंधोदकस्नानं समर्पयामि.

પાણીમાં ચંદન મેળવી ચઢાવવું.

## શુદ્ધોદક સ્નાનનો વિધિ.

(૭) शुद्धोदकम्ः—

ॐ श्री इष्टदेवताभ्यो नमः शुद्धोदकस्नानं समर्पयामि ।

( કલશમાનું ચોકખું પાણી ચઢાવવું )

## ( पंचामृत ) पंचोपचार पूजननो विधि.

( આ પૂજન તરભાણામાંજ કરવાનું છે. તરભાણામાંથી પંચામૃત સ્નાનનું જલ બીજા કોઈ પાત્રમાં કાઢી લેવું અને બાદ આ પૂજન કરવું. )

( १ ) चंदनम्ः—

ॐ श्री इष्टदेवताभ्यो नमः विलेपनार्थे चंदनं समर्पयामि ।

( ચંદન ચઢાવવું. )

( २ ) अक्षतः—

ॐ श्री इष्टदेवताभ्यो नमः अलंकारार्थे अक्षतान् समर्पयामि ।

( અક્ષત, તુલસી, દુર્વા બિલી, શમી, અર્ક ઇત્યાદિના પાન ચઢાવવાં )

सौभाग्यद्रव्यम्ः—

ॐ श्री इष्टदेवताभ्यो नमः हरिद्रा कुंकुमादि सौभाग्यद्रव्यं सम०

( હળદર, કંકુ, સિંદુર, અબીર ઈત્યાદિ ચઢાવવાં )

( ३ ) पुष्पंः—

ॐ श्री इष्टदेवताभ्यो नमः पूजार्थे ऋतुकालोद्भव पुष्पाणि सम०

( જે ઋતુમાં જે ફુલો હોય તે ચઢાવવાં )

( ૪ ) धूपः—

ॐ श्री इष्टदेवताभ्यो नमः धूपं दर्शयामि ।

( ધુપ બતાવવું )

दीपः—

ॐ श्री इष्टदेवताभ्यो नमः दीपं दर्शयामि ।

( આરતી કરવી ઘંટાનો નાદ કરવો )

( ૫ ) नैवेद्यम्ः—

ॐ श्री इष्टदेवताभ्यो नमः पंचामृत शेष नैवेद्यं सम०

( વધેલા પંચામૃતનું શેષ નૈવેદ ધરવું. )

ॐ प्राणाय स्वाहाः ॐ अपानाय स्वाहाः ॐ व्यानाय स्वाहाः ॐ उदानाय स्वाहाः ॐ समानाय स्वाहाः ॐ ब्रह्मणे नमः

मध्ये पानीयं सम० ( ઉપર જણાવ્યા મુજબ પુષ્પ વડે પાણીનું સિંચનાદિ કરવું તથા ફરીથી ॐ प्राणाय स्वाहाः ॐ अपा० ॐ व्याना० ॐ उदा० ॐ समानाय स्वाहाः ॐ ब्रह्मणे नमः ( એ પ્રમાણે બોલવું. )

उत्तरापोशनं समर्पयामि, हस्तप्रक्षालनं सम. मुख प्रक्षालनं सम०

( દરેક સમયે પાણી છોડવું તથા મનમાં ભગવાનને હાથ મોં ધોવડાવવાની ભાવના સેવવી )

करोद्वर्तनार्थे चंदनं सम० ( ચંદન ચઢાવવું )

तांबूलम्ः—

श्री इष्टदेवताभ्यो नमः मुखवासार्थे पूगीफलंतांबूलं सम०

( મુખવાસને માટે તાંબુલ એટલે નાગરવેલીનાં બે પાન અને એક સોપારી મુકવી. )

दक्षिणाः—

श्री इष्टदेवताभ्यो नमः यथाशक्ति दक्षिणां सम०

( દક્ષિણા યથાશક્તિ મુકવી )

फलः—

श्री इष्टदेवताभ्यो नमः फलं सम०

( ફળ મુકવું )

प्रदक्षिणाः—

श्री इष्टदेवताभ्यो नमः प्रदक्षिणां सम०

( પ્રદક્ષિણા કરવી )

नमस्कारः—

श्री इष्टदेवताभ्यो नमः नमस्कारं सम०

( નમસ્કાર કરવા )

मंत्र पुष्पंः—

श्री इष्टदेवताभ्यो नमः मंत्र पुष्पं सम०

( ફુલ ચઢાવવાં )

ध्यानम्ः—

श्री इष्टदेवताभ्यो नमः ध्यानं सम०

( ધ્યાન કરવું )

अनेन पंचामृत पूजनाख्येन कर्मणा भगवान् श्री इष्टदेवता प्रीयतां नमम ( તરભાણામાં પાણી છોડવું )

उत्तरे निर्माल्यं विसर्जयेत् ( उपरनी पूजामां चढावेलां फुल इत्यादि जमणा नाक वडे सुंघी उत्तर दिशा तरफ नाखवां. )

## अभिषेकनो विधि.

अभिषेकं कुर्यात् અભિષેક કરવો. મહિમ્ન રૂદ્રી શ્રીસૂક્ત, હિરણ્યસૂકતાદિ આવડતાં હોય તો ભણવાં. જેઓને ન આવડતા હોય તેમણે એક ચિત્તથી કોઈની સાથે બોલ્યા શિવાય ॐ श्री इष्टदेवताभ्योनमः ( અગર ઇષ્ટદેવતાનું જે નામ હોય તે ) એ મંત્રથી ૧૦૮ વાર અભિષેક કરવો. દરેક વખતે જલ ચઢાવતા જવું. હોય તો અભિષેકપાત્રની જલધારી મુકવી) અભિષેક પુરો થયા બાદ

महा अभिषेक स्नानं सम० (લોટામાંનુ ચોખ્ખુ પાણી ચઢાવવું)

मांगलिक स्नानं सम० ( અત્તર હોય તો ચઢાવવું )

उष्णोदक स्नानं सम० ( ગરમ પાણી ચઢાવવું )

शुद्धोदक स्नानं सम० ( શુદ્ધ જલ ચઢાવવું નાદ કરવો હર હર મહાદેવ, નારાયણ નારાયણ ઈત્યાદિ ધ્વનિ કરવો.)

( શુદ્ધ વસ્ત્રથી મૂર્તિને સાફ કરવી તથા અસલના સ્થળે પધરાવવી. )

आचमनीयम्:—

ॐ श्री इष्टदेवताभ्यो नमः અભિષેકાદિઅનંતર आचमनीयं सम०

( ત્રણ વખતે પાણી તરભાણામાં છોડવુ તથા ચોથી વખતે બહાર છોડવું. ભગવાનને આચમન માટે પાણી આપ્યું એવી ભાવના મનમાં સેવવી. )

## महापूजानो विधि.

प्रतिष्ठिताः—

ॐ श्री इष्टदेवताभ्यो नमः सुप्रतिष्ठित मस्तु

( જગા ઉપર બેસવાની વિનંતિ કરી અક્ષત ચઢાવવા.)

वस्त्रम्:—

ॐ श्री इष्टदेवताभ्यो नमः महावस्त्रं सम०

( મહાવસ્ત્ર પહેરાવવાં )

यज्ञोपवीतम्:—

ॐ श्री इष्टदेवताभ्यो नमः यज्ञोपवीतं सम०

( જનોઇ પહેરાવવી )

आभूषणम्—

ॐ श्रीइष्टदेवताभ्यो नमः आभूषणं सम०

( નાના પ્રકારના કુંડળાદિ આભૂષણો પહેરાવવાં કિંવા તે અભાવે અક્ષત અને તુલસી ચઢાવવાં.

चंदनम्—

ॐ श्रीइष्टदेवताभ्यो नमः । विलेपनार्थे चंदनं सम०

( ચંદન ચઢાવવું. )

**सौभाग्य द्रव्यं—**

ॐ श्रीइष्टदेवताभ्यो नमः । हरिद्रा कुंकुनादिनानापरिमल द्रव्यं सर्म०

( હળદર કંકુ, અબીલ, ગુલાલ, કજ્જલ, સિંદુર ઇત્યાદિ સૌભાગ્ય અલંકારો ચઢાવવા. )

**पुष्प—**

ॐ श्री इष्टदेवताभ्योनमः ऋतु कालोद्भव नानाविध पुष्पाणि सम०

( નાના પ્રકારના ફુલ, હાર, કલગી ઈત્યાદિ યથાશક્તિ અર્પણ કરવાં. )

**तुलसी पत्र किंवा अक्षता—**

ॐ श्री इष्टदेवताभ्योनमः तुलसी, बिल्व पत्रादि सम०

( વિષ્ણુ-તુલસી, શિવ-બિલ્વ, ગણેશ-દૂર્વાશમી સૂર્ય-અર્ક, શમી, તુલસી, દેવી-બિલ્વ, તુલસી, ઈત્યાદિ નાના વિધ પત્રાણિ સમ૦ )

તુલસી પત્રાદિ ચઢાવતી વખતે સમય હોય તો દરેક પત્ર ચઢાવતી વખતે ॐ श्री इष्टदेवताभ्योनमः (મંત્ર નિદાન ૧૦૮ વખત બોલવો તુલસી પત્રાદિ નહિ હોય તો અક્ષત ચઢાવવા. )

**धूप—**

ॐ श्री इष्टदेवताभ्योनमः धूपं दर्श०

( ધૂપ કિંવા અગરબત્તી ધરવી, ઘંટાનો નાદ કરવો. )

दीपं—

ॐ श्री इष्टदेवताभ्योनमः दीपं सम०

( ઘીનો દીપક ધરવો ઘંટા નાદ કરવો. )

नैवेद्य—

ॐ श्री इष्टदेवताभ्योनमः महा नैवेद्यं सम०

( મહા નૈવેદ્ય કિંવા બીજું કોઇ નૈવેદ્ય ધરવું. )

( પુષ્પ કિંવા તુલસી હાથમાં લઈ થાળની દશ દિશાએ પાણીથી માર્જન સિંચન કરવું. નેત્ર બંધ કરી મનમાં ભગવાન આરોગવા બેઠા છે એવી ભાવના કરવી અને નીચેના મંત્રો બોલવા. )

ॐ प्राणायस्वाहा, ॐ अपानायस्वाहा, ॐ व्यानायस्वाहा, ॐ उदानायस्वाहा, ॐ समानायस्वाहा, ॐ ब्रह्मणेनमः मध्ये पानीयं सम०

( ઉપર જણાવ્યા પ્રમાણે થાળની દશ દિશાએ સિંચન કરવું અને ફરીથી )

ॐ प्राणायस्वाहा ॐ अपा० ॐ व्याना० ॐ उदाना० ॐ समानायस्वाहा, ॐ ब्रह्मणेनमः

એ પ્રમાણે બોલવું.

उत्तरापोशनं सम० हस्तप्रक्षालनं मुख प्रक्षालनं सम०

( દરેક સમયે પાણી છોડવું તથા ભગવાનને હાથ મોં ધોવરાવવાની ભાવના મનમાં રાખવી. )

करोद्वर्तनार्थे चंदनं सम०

(ચંદન ચઢાવવું.)

मुखवासार्थे पूगीफल तांबुलं सम०

(મુખવાસને માટે તાંબૂલ એટલે નાગર વેલીના બે પાન અને એક સોપારી મુકવી અથવા તૈયાર કરેલો બે અગર પાંચ પાનનો તાંબૂલ બીડો અર્પણ કરવો.)

फलं—

श्री इष्टदेवताभ्योनमः फलार्थं नारिकेलादि फलं सम०

(નારિયેળ તથા ઇતર ફળો જે હોય તે અર્પણ કરવાં.)

दक्षिणा—

श्री इष्टदेवताभ्योनमः यथाशक्ति दक्षिणां सम०

(યથાશક્તિ દક્ષિણા મુકવી)

आरति—

श्री इष्टदेवताभ्योनमः आर्तिक्यदीपं सम०

(આરતીનો દીપ કરવો પંચારતી વિગેરે અથવા પ્રથમ લગાડેલો દીપક લઇ આરતી ઉતારવી, અત્રે આરતી બોલવી)

कर्पूरदीप—

श्री इष्टदेवताभ्योनमः कर्पूरदीपं सम०

मंत्र—कर्पूरगौरं करुणावतारं, संसारसारं भुजगेंद्रहारं, सदावसंतं

हृदयारविंदे भवंभवानी सहितं नमामि

( આ મંત્રથી કપૂર લગાડવું અને આરતી કરવી )

**प्रदक्षिणा—**

यानिकानिच पापानि जन्मान्तरकृतानिच । तानितानि विनश्यंति प्रदक्षिण पदे पदे ॥

ॐ श्री इष्टदेवताभ्यो नमः प्रदक्षिणां सम०

( પ્રદક્ષિણા કરવી )

**नमस्कार—**

नमोस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।

सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटि युगधारिणेनमः ॥

ॐ श्री इष्टदेवताभ्योनमः नमस्कारान् सम०

( સાષ્ટાંગ ભાવે નમસ્કાર કરવો )

**मंत्रपुष्प—**

ॐ यज्ञेन यज्ञ०

ઈત્યાદિ આ મંત્ર પુષ્પનો મંત્ર સ્તોત્રાદિ ભાગમાં આવેલો છે તે જુઓ. ( અગર હાથમાં ફુલ તુલસી વગેરે લઈ ઉભા રહી નીચેનો મંત્ર ભણવો )

हस्ते विश्वाऽखिलाधारो ।

निराधार निराश्रयः ॥

पुष्पांजलिं गृहाणेमं ।

विश्वेश्वर नमोस्तुते ॥

ॐ श्री इष्टदेवताभ्योनमः मंत्र पुष्पं सर्म०
( ફુલ વિગેરે ચઢાવવાં )

**प्रार्थना—**

( હાથ જોડી મૂર્તિની સામે ઉભા રહી સ્થિર ચિત્તથી પ્રાર્થના કરવી. )

आवाहनं न जानामि न जानामि तवार्चनम्
पूजां चैव न जानामि क्षमस्व परमेश्वर
मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर
यत्पूजितं मयादेव परिपूर्णं तदस्तु मे
अपराध सहस्राणि क्रियन्तेऽहर्निशं मया
दासोयमितिमां मत्वा क्षमस्व परमेश्वर
गतं पापं गतं दुःखं गतं दारिद्र्य मेवच
आगता सुख संपत्तिः पुण्याच्च तवदर्शनात्
ॐ श्री इष्टदेवताभ्योनमः प्रार्थनापूर्वक नमस्कारान् समर्पयामि ॥
अनेन निष्कामभावेन षोडशोपचार पूजनाख्येन
कर्मणा भगवान श्री इष्टदेवता प्रीयतां नमम ।
ॐ श्री परमेश्वरार्पण मस्तु ॥ ॐ तत्सत्.

## તીર્થનો મંત્ર

अकाल मृत्यु हरणं सर्व व्याधि विनाशनम्
विष्णुपादोदकं तीर्थं जठरे धारयाम्यहम् ॥

( તીર્થ તથા પ્રસાદ લેવો )

## जपविधि प्रकार

( પૂજન થયા બાદ જપ કરવાનો વિધિ )

अद्य प्रवर्तमाने शुभदिने निष्कामभावेन इष्टदेवता....(अमुक) नाम मंत्र जपमहं करिष्ये–

( આ પ્રમાણે સંકલ્પ કરી જમણા હાથમાં પાણી લઈ તરભાણામાં છોડવું તથા મૌનવ્રતથી કોઇને પણ અડયા શિવાય સ્થાન ઉપર પદ્માસનાદિ પોતાને અનુકુળ હોય એવું આસન કરી પ્રથમ લેખન જપ લખવા તે લખાઇ રહ્યા બાદ ધ્યાનસ્થ થઈ શરીરની સ્તબ્ધતા અને મનની સ્થિરતા કરી ઈષ્ટદેવનું મનમાં ધ્યાન કરવું તથા નિયમિત રીતે બની શકે તેટલો માનસિક જપ નિયમ પ્રમાણે કરવો. લેખન જપ કરવાની ઇચ્છા ના હોય તો એકલો મંત્ર જપજ કરવો.

ॐ इष्टदेवताभ्यो नमः

( મંત્ર જપ થઈ રહ્યા બાદ ઊભા થઇને નિચેના મંત્રો વડે દશ દિશાએ નમસ્કાર કરવા. )

(१) पूर्वे पूर्वस्यां दिशि इन्द्रायनमः (२) अग्नि–आग्नेयां अग्नये-नमः (३) दक्षिणस्यां दिशि यमायनमः (४) नैऋत्यां दिशि निऋतये नमः (५) प्रतीच्यां (पश्चिम) दिशि वरुणायनमः (६) वायव्यां दिशि वायवेनमः (७) उदीच्यां (उत्तर) दिशि सोमायनमः (८) ईशान्यां दिशि ईश्वरायनमः (९) उर्ध्वायां दिशि ब्रह्मणेनमः (१०) अधरस्यां दिशि अनंतायनमः

सर्वेभ्योदेवेभ्यो नमोनमः । सर्वेभ्योब्राह्मणेभ्योनमः ॥

आकाशात्पतितं तोयं यथा गच्छति सागरम् ।

सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥

अनेन निष्कामभावेन इष्टदेवता जपाख्येन कर्मणा श्रीपरमात्मा प्रीयताम् ।

इति जपविधिः समाप्तः

## श्री सूर्यपूजन तथा नमस्कार विधि.

( જપ વિધિ પુરો થયા બાદ શ્રી સૂર્યનારાયણનું પૂજન અને દ્વાદશ ( બાર ) નમસ્કાર ( સાષ્ટાંગ ) કરવા તેનો વિધિ. )

अद्येत्यादि पूर्वोच्चरितवर्तमान एवं गुण विशेषेण विशिष्टायां शुभ पुण्यतिथौ ममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ममआत्मनः श्री परमेश्वरप्रीत्यर्थं श्री सवितासूर्यनारायण पूजनं तथा च द्वादश नमस्काराऽख्यं कर्म करिष्ये ॥

( આ મુજબ સંકલ્પ કરી જમણા હાથ વડે તરભાણામાં પાણી છોડવું. )

**श्री सूर्यध्यानः—**

( સૂર્યનું ધ્યાન કરવું: હાથમાં લાલ ફૂલ રાખવું. )

**अथध्यानम्—**

ध्येयः सदा सवितृमण्डल मध्यवर्ती नारायणः सरसिजासन सन्निविष्टः

केयूरवान्मकर कुण्डलवान् किरीटी ।
हारी हिरण्मयवपुर्घृत शंख चक्रः इतिध्यानम् ॥

( સાષ્ટાંગભાવે નમસ્કાર કરવા. )

( १ ) ॐ मित्रायनमः ( २ ) ॐ रवयेनमः
( ३ ) ॐ सूर्यायनमः ( ४ ) ॐ भानवेनमः
( ५ ) ॐ खगायनमः ( ६ ) ॐ पूष्णेनमः
( ७ ) ॐ हिरण्यगर्भायनमः ( ८ ) ॐ मरीचये नमः
( ९ ) ॐ आदित्यायनमः (१०) ॐ सवित्रेनमः
(११) ॐ अर्कायनमः (१२) ॐ भास्करायनमः

ॐ मित्ररवि सूर्यभानु खगपूष हिरण्यगर्भ मरीचि आदित्य सावित्रऽर्कभास्करेभ्यो नमोनमः ॥

( આ પ્રમાણે બાર નમસ્કાર થઈ રહ્યા પછી ઉપરના બાર મંત્ર વડે પાણીમાં ચંદન ફુલ મિશ્રિત અર્ઘ્ય આપવા. )

**प्रार्थनाः—**

आदित्यस्य नमस्कारं येकुर्वन्ति दिनेदिने ।
जन्मान्तरसहस्त्रेषु दारिद्र्यंनोपजायते ॥

( તીર્થ લેતી વખતે ભણવાનો મંત્ર )

अकालमृत्युहरणं सर्वव्याधि विनाशनम्
सूर्यपादोदकंतीर्थं जठरेधारयाम्यहम् ॥

अनेनद्वादश नमस्काराऽख्येन कर्मणा
श्री सूर्यनारायणः प्रीयतांनमम ॥
ॐ तत्सत् ब्रह्मार्पणमस्तु ॥

શ્રી સૂર્ય નમસ્કાર તથા પૂજન થયા પછી ઈષ્ટ દેવતાની સાન્નિધ્યમાં બેસી ગાયના છાણથી શુદ્ધ કરેલી જમીન ઉપર હવન કુણ્ડ મુકી કરેલા મંત્ર જપ જેટલી સંખ્યા કિંવા નિદાન, ૧ માળા નામ મંત્ર વડે ઘીથી હવન કરવો. કિંવા લખેલા નામની કાપલીઓ કરી તેની ગોળીઓ બનાવી તે વડે ઘીની સાથે હવન કરવો.

**संकल्प**

अद्य शुभदिने निष्काम भावेन श्री इष्टदेवता नाम मंत्रेण हवनमहं करिष्ये । इति संकल्पः ।

ॐ इष्टदेवताभ्यः स्वाहाः

( જપના જે મંત્ર હોય તે નામ લઈ તેને નમઃની જગાએ સ્વાહા લગાડવું. )

अनेन हवनाख्येन कर्मणा तेन श्रीइष्टदेवता प्रीयतां नमम

ॐ तत्सत् ब्रह्मार्पणमस्तु

નામ મંત્રથી હવન કર્યો હોય તો તે થયા બાદ અગર શ્રી સૂર્ય નમસ્કાર થયા બાદ વૈશ્વદેવ કરવો કિંવા નિદાન ॐ सूर्यायनमः અગર ॐ अग्नयेनमः એ નામ મંત્ર વડે ઘીની સોળ આહુતિઓ અગ્નિમાં હોમવી અને બાદ

તેનું ચંદન પુષ્પાદિથી પૂજન કરી પ્રાર્થના કરવી અને વિભૂતિ લગાડવી.

[ પ્રાર્થના સમયે ભણવાનો મંત્ર ]

ॐ स्वस्ति श्रद्धांमेघां यशः, प्रज्ञां, विद्यां बुद्धिं श्रियंबलं। आयुष्यं तेज आरोग्यं देहिमे हव्यवाहन ॥

આ મુજબ ધ્યાન થયા બાદ ઇષ્ટદેવતાનું સ્મરણ કરી ભોજન કરવું. ભોજન સમયે મૌન રાખી શ્વાસે શ્વાસે ઇષ્ટદેવતાનું સ્મરણ કરતા જવું જેથી મહાન તપશ્ચર્યા થાય છે.

( ભોજનની શરૂઆત કરતાં પહેલાં ગાય તથા કાગડાને પિતરોની તૃપ્તિ અર્થે નૈવેદ્ય નાંખવા ચુકવું નહિ અને પોતે પણ બનતાં સુધી ઇષ્ટદેવને જે થાળમાં નૈવેદ્ય ધર્યું હોય તે થાળ જ લેવો. )

देनेकु अन्नपान लेनेकु हरिनाम ।
तरनेकु लीनता डुबनेकु अभिमान ॥

राम नाम सब कोई कहे
ठग ठाकूर और चोर ।
जिसनामसे ध्रुव प्रल्हाद तरे
वो नाम है कुछ और ॥

## સાયંકાળનો ક્રમ

( પ્રાતઃકાળમાં જણાવ્યા પ્રમાણે પાનાં શરૂઆતમાં જુઓ ) વિષ્ણુ ધ્યાનાદિથી અન્ય પ્રાર્થનાઓ પૂર્ણ થતાં સુધી यत्रयोगेश्वरः कृष्णः એ શ્લોક પૂર્ણ થતાં સુધી ભણવું તથા બાદ નિદાન [ ૧ ] સંકષ્ટનાશન ગણેશસ્તોત્ર, [ ૨ ] ચર્પટ પંજરી, [ ૩ ] વિજ્ઞાનનૌકા, [ ૪ ] નિર્વાણષટક્ તથા નવગ્રહસ્તોત્રોનો પાઠ કરવો અગર પોતાને યોગ્ય લાગે તે પાંચ સ્તોત્રો ભણવાં બાદ ભોજન વાળું કરવું. )

## રાત્રે વાળુ થયા બાદ

નિદાન પાંચ ભજનો ગાવાં. (ભજનો પાછળ આપેલાં છે) ભજન પૂર્ણ થયા પછી નીચે પ્રમાણેની પ્રાર્થના કરવી.

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे,
सुरतरुवर शाखा लेखिनी पत्रमुर्वी ।
लिखति यदि गृहीत्त्वा शारदा सर्वकालं,
तदपि तव गुणानामीश पारं न याति ॥

करचरणकृतं वाक्कायजं कर्मजंवा
श्रवणनयनजंवा मानसं वापराधम् ।

विहितमविहितं वा सर्वमेतत्क्षमस्व
जयजय करुणाब्धे श्रीमहादेवशंभो ॥

कायेनवाचा मनसेन्द्रियैर्वाबुध्यात्मना वानुसृतस्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

धून अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं । श्रीजानकीनायकं रामचन्द्रं भजे ॥

हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।

( जयघोष )

નિદ્રા સમયે પથારી ઉપર સ્થિર ચિત્તે બેસી મન એકાગ્રતાનો અભ્યાસ કરવો. પ્રથમ નિદ્રાન એક માળા ઈષ્ટદેવનો જપ તથા મનમાં મૂર્તિનું ધ્યાન કરવું. ઇતિશમ્

# દરેક મુમુક્ષુ જીજ્ઞાસુઓને અભ્યાસ માટે મનન કરવા યોગ્ય સુભાષિતો

# સુવિચારમાલા.

## મોક્ષનું બીજ અને ઈશ્વરી કૃપાનું લક્ષણ.

(૧) "જેઓને મોક્ષ પ્રાપ્તિ થવાનો યોગ હોતો નથી તેવા મૂઢ લોકોને ગમે તેટલી વખત વિષય-વાસનાઓની તુચ્છતાનું ભાન કરાવવામાં આવે તો પણ તેવાઓની અંતર એટલે માનસિક સ્થિતિમાં રજકણ જેટલો પણ પ્રકાશ પડતો નથી. જ્યારે સ્વધર્માનુસાર શ્રી પરમાત્માની સશાસ્ત્ર ઉપાસના કરવાથી ચિત્ત શુદ્ધિ થઈ જેઓને વિષય વિરાગની એટલે વિષય સુખની નિરસતા સમજાઈ ખરેખરા અંતઃકરણથી માનસિક ખેદ ઉત્પન્ન થઈ પશ્ચાત્તાપ થાય છે તેવા વિરક્તો ઉપર ઈશ્વરી અનુગ્રહ હોઈ મોક્ષ પ્રાપ્તિ માટેનું બીજ તેઓનામાં ખાસ છે, એમ નિશ્ચિત સમજવું."

## શ્રી સદ્દગુરુની કૃપા તથા કૈવલ્ય પદની પ્રાપ્તિ.

(૨) અંતઃકરણમાં વિષય વિરાગ ઉત્પન્ન થવાથી સાધકની સ્થિતિ વિષયભોગ સંબંધમાં હંમેશ ઉદાસ હોય છે. પરન્તુ અનેક વિષયવાસનાઓ રૂપી પૂર્વ સંસ્કારોના દીર્ઘકાલ પર્યંતના સહવાસથી તે ટેવાયલો

હોવાથી તેનો ત્યાગ પણ કરી શકતો નથી, તેમ વિષયોપભોગમાં પ્રીતિ પણ રહેતી નથી; જેથી હંમેશાં ઉદાસ થઈ ખિન્ન અવસ્થાને પ્રાપ્ત થાય છે. આ પ્રમાણે સ્થિતિ થયા બાદ શ્રી સદ્‌ગુરૂ તેને નિરંતર આત્મસ્વરૂપનો સત્ય બોધ આપી સ્વસ્વરૂપનું ભાન કરાવે છે. જેનો દઢ અભ્યાસ તથા સતત પ્રયત્ન કરવાથી સાધકને આત્મતત્ત્વ સાક્ષાત્કાર થઇ સ્વાનુભવ યુક્ત એવું પરમપદ તે શ્રી સચ્ચિદાનંદ સ્વરૂપ પ્રાપ્ત થઇને કૈવલ્ય પદમાં સ્થિત થાય છે; આ અવસ્થાને જ શાસ્ત્રકારો મુક્તિ કિંવા મોક્ષ કહે છે.

## પરમપદ પ્રાપ્તિ.

(૩) અંધારાને લીધે નજીક હોવા છતાં વસ્તુઓ દેખાતી નથી એવો ભાસ થાય છે પરન્તુ પ્રકાશ થતાં જ તાબડતોબ તે પ્રાપ્ત થઈ શકે છે. તે પ્રમાણે જ અનંત પ્રકારોની વિષય-વાસનાઓના અજ્ઞાન રૂપી તમ એટલે અંધકારની છાયાને લીધે આત્મા નજીક હોવા છતાં પ્રાપ્ત નથી એવો જે ભ્રમ થયેલો છે તે આત્મજ્ઞાન રૂપી દીપકથી હઠાવી અત્યંત સુખ-શાન્તિનું જે સ્થાનક એવા પરમપદની પ્રાપ્તિ કરી લેવી જોઈએ. એજ એક મનુષ્ય જીવન ધ્યેય છે.

(૪) નિરાધાર એવા સ્વૈર વૃત્તિના ખોટા તર્ક કુતર્કો કરવાનો હાનિકારક માર્ગ છોડી શાસ્ત્ર માન્ય પદ્ધતિથી

સ્વધર્માચરણ કરી સુવિચારનો આશ્રય કરવા થકી જ ખરૂં શ્રેય તત્કાળ સાધ્ય થઈ શકે છે.

(૫) સયુક્તિક વિચાર પદ્ધતિનો આશ્રય કરી એકનિષ્ઠા (શ્રદ્ધા) અને અનન્યભક્તિ રાખી ઉપાસનાંદિ સાધનો કરવાં.

(૬) સુવિચારવશાત્ ઉત્પન્ન થયેલી શ્રદ્ધાજ મનુષ્યોને ખરૂં ફળ આપી શકે છે.

(૭) સર્વ ત્રૈલોકયની પ્રવૃત્તિઓ પૂર્ણ શ્રદ્ધા અને દૃઢ નિશ્ચયથીજ સફળ થઈ શકે છે.

(૮) શ્રદ્ધા યુક્ત સુવિચાર થકીજ યોગ્ય સમય જાણી લીધા બાદ ખેડુતો જમીનની પેરણી કરે (ખેડે) છે, એવો વ્યવહારમાં પણ અનુભવ છે.

(૯) સરળ વિચાર અને શ્રદ્ધાના બળ વડે સ્વહિતનો નિશ્ચય ઠેરવી શ્રેય પ્રાપ્તિની સાધના માટે દીર્ઘ પ્રયત્ન કરવો.

(૧૦) નિષ્કામ ભાવનાથી કરેલા દેવાર્ચનાદિ શુભ કાર્યનું પૂર્ણ શ્રેય મનુષ્યો પ્રાપ્ત કરી શકે છે. પ્રામાણિકતાથી યુક્ત વિચાર અને અનુભવ વડે સશાસ્ત્ર સાધનોનો દૃઢ અભ્યાસ કરવો કે જેથી મુખ્ય શ્રેય જે મોક્ષ અથવા પરમપદ પ્રાપ્તિ તે સાધ્ય થઈ શકશે.

(૧૧) નિરાધાર એવા તર્ક કુતર્ક કરનારાઓની અન્તે દુર્ગતિજ થાય છે.

# સુવિચાર

## ( મન સ્થિર કરવા માટે )

મુમુક્ષુ જનોએ મનને આ પ્રમાણે દરરોજ ઉપદેશ કરતા જવો.

૧ હે મન ! મમતા છોડી દે એટલે આસક્તિ રહિત સંસાર વ્યવહાર કર.

૨ લોભ તથા મોહ રૂપી મિથ્યા માયાની જાળમાં કદી પણ ફસાઈશ નહી.

૩ ખલ, દુર્જન, દુષ્ટ એવાઓની સંગતિ કદી પણ કરવી નહી.

૪ બીજું ના બની શકે તો પણ નિદાન કુલ પરંપરાગત ચાલતા આવેલા નિત્ય, નૈમિત્તિક કર્મો કરવાનું ચુકવું નહીં.

૫ ભવ એટલે સંસારનું દુઃખ નિવારણ કરી મોક્ષ માર્ગ બતાવે એવા દેવને કદી પણ છોડીશ નહીં.

૬ સંસારમાં આવતા પ્રવાહ પતિત સુખદુઃખાદિ હર્ષશોક માન્યા વગર આનંદથી ભોગવી લેવાનો અભ્યાસ કર.

૭ સંસાર દુઃખથી ત્રાસીને અગર શોક કરીને વનમાં જવાનો કદી વિચાર સુદ્ધાં કરીશ નહી.

૮ કોઇ કઠોર શબ્દો કહે તો તેમાં કદી પણ દુઃખ માનીશ નહીં.

૯ ભોગ, સુખ દુઃખાદિનો વિચાર છોડી દઈ પોતાના સ્વ-સ્વરૂપનું ભાન ભુલીશ નહીં અને નિજાનંદના સુખમાં ભંગ પડવા ના દઈશ.

૧૦ લાભ થાય તો હર્ષથી ફુલાઇ જઈશ નહીં.

૧૧ નુકસાન થવાથી વિષાદ અગર શોક માનીશ નહીં.

૧૨ કોઈની નિંદા, તેમજ પ્રશંસા પણ કરીશ નહીં.

૧૩ અહંપણું એટલે અહંકારનો ત્યાગ કર.

૧૪ કોઇનું પણ પાછલા શુભાશુભ કૃત્યનું સ્મરણ કરીશ નહીં.

૧૫ મારૂં તારૂં કરીશ નહીં.

૧૬ આપ્તજનો એટલે કુટુંબીજનોની સાથે પણ મમત્વ ( આસક્તિ ) રાખીશ નહીં મતલબ કે મારા, તારા, એવો દ્વૈત ભાવ રાખીશ નહીં.

૧૭ ગુરૂ પરબ્રહ્મને છોડીશ નહીં.

૧૮ પ્રારબ્ધમાં સુખ ભોગ ના ( લખાયું ) હોય તો તે બદલ દૈન્ય ( દુઃખ ) માનીશ નહીં.

૧૯ ઇંદ્રના જેવા મહાન સંપત્તિમાન થવાની અથવા ધનાઢ્ય થવાની આશા સેવીશ નહીં.

૨૦ ઈતર ધનવાન છે. હું તેવો નથી એવા પ્રકારની ક્ષુદ્રાર્થ વાંચ્છના સેવી પોતાની જાતને ધિક્કારીશ પણ નહીં.

૨૧ કૃતકર્મવશાત્ મળતું દેહનું દુઃખ અને ત્યાં સુધી મુંગે મોંઢે સહન કરવાનો અભ્યાસ કર.

૨૨ લોકોમાં ગમે તેવા મહત્ સંકટ પ્રસંગો પ્રાપ્ત થાય તો પણ તું તારા સત્ય તત્વનો કદી પણ ત્યાગ કરીશ નહીં.

૨૩ મોહ, માયા, મમતાનો ત્યાગ કર.

૨૪ સુસંગતિ મળે છોડીશ નહીં.

૨૫ ખોટી ખોટી ચિંતાઓ અને શોક કદી પણ કરીશ નહી.

૨૬ પરમાર્થ કાર્ય કરવામાં કદી પણ શરમ રાખીશ નહીં.

૨૭ લોકોમાં ખોટી ગરબડ કરીશ નહીં. બને તેટલું મૌન સેવવાનો પ્રયત્ન કર.

૨૮ લોકોમાં બેસી જગતનાં ખોટાં ગપ્પાં મારીશ નહીં.

૨૯ ચિત્તમાં રાગ અને ક્રોધ રાખીશ નહીં.

૩૦ સત્ય અને દૃઢ વૈરાગ્ય પ્રાપ્ત કરવાનો વિવેકાદિ દ્વારા અહોનિશ પ્રયત્ન કર.

૩૧ નાના પ્રકારના અત્યાચારો અને કુકર્મો કરવાની ક્ષુદ્ર બુદ્ધિનો અંગીકાર કરવાનું સ્વપ્નમાં પણ વિચારીશ નહીં.

૩૨ મિથ્યા માયાકલ્પિત અને પરિણામે અતી દુઃખદ એવા આ ધનાદિ વિષય સુખોના ભોગની ઇચ્છા કરીશ નહીં.

૩૩ શરીરને ખોટા કલેશ પણ આપીશ નહીં.

૩૪ મૂર્ખ, મૂઢ અને અજ્ઞાની લોકોની સંગતિ કદી પણ કરીશ નહીં.

૩૫ જ્યાં ગયા પછી પાછું આવવાનું રહેતું જ નથી એટલે જન્મ મરણના ફેરામાંથી મૂક્ત થઈ શકાય છે એવું જે યોગી લોકોનું પરમ ધામ તેની પ્રાપ્તિ માટે જગત રૂપી મિથ્યા માયા ભ્રમ છોડી દઈ દીર્ઘ પ્રયત્ન અને સતત્ અભ્યાસથી સ્વસ્વરૂપાનુભવ પ્રાપ્ત કરી લે.



ॐ श्री परमात्मने नमः

# श्री भजनसार संग्रह



## पद १

### स्तुति—राग बिलवल

गाइये गनपति जगबन्दन ।
संकर—सुवन भवानी—नन्दन ॥१॥
सिद्धि—सदन, गजवदन, बिनायक ।
कृपा—सिंधु, सुंदर सब लायक ॥२॥
मोदक—प्रिय, मुद—मंगल दाता ।
विद्या—बारिधि, बुद्धि—बिधाता ॥३॥
माँगत तुलसिदास कर जोरे ।
बसहिं रामसिय मानस मोरे ॥४॥

## पद २

जागिये व्रजराजकुँवर कमल कुसुम फूले ।
कुमुद—बृंद सकुचित भये भृंगलता भूले ॥१॥
तमचुर खग शैर सुनहु बोलत बनराई ।
राँभति गौ खरिकनमें बछरा हित धाई ॥२॥
बिधु मलीन रबिप्रकास गावन नर—नारी ।
सूर स्याम प्रात उठौ अंबुज कर धारी ॥३॥

## पद ३

इतने गुन जामे सो सन्त ।
श्री भागवत मध्य जस गावत, श्रीमुखकमलाकंत ॥१॥
हरिका भजन साधुकी सेवा सर्व भूतपर दया ।
हिंसा लोभ–दंभ छल त्यागे विषसम देखे माया ॥२॥
सहनशील आसय उदार अति, धीरज सहित विवेकी ।
सत्यवचन सबको सुखदायक, गहि अनन्य व्रत एकी ॥३॥
इंद्रजित अभिमान न जाके करे जगतको पावन ।
भगवतरसिक तासुकी संगति तिन्हहु ताप नसावन ॥४॥

## पद ४

श्री रामचन्द्र कृपालु भजमन, हरण–भव–भय दारुणं ।
नवकञ्ज–लोचन, कञ्ज–मुख कर–कञ्ज, पद कञ्जारुणं ॥१॥
कन्दर्प–अगणित–अमित छबि नव–नील–नीरद सुन्दरं ।
पटपीत मानहुँ तडित रुचि शुचि नौमि जनक–सुता–वरं ॥२॥
भज दीनबन्धु दिनेश दानव दैत्य–वंश–निकन्दनं ।
रघुनन्द आनन्दकन्द कोसल–चन्द दशरथ नन्दनं ॥३॥
शिर मुकुट कुण्डल तिलक चारु उदार–अंग विभूषणं ।
आजानु–भुज–शर–चाप–धर संग्राम–जित खर दूषणं ॥४॥
इति वदत तुलसीदास, शंकर–शेष–मुनि–मन–रञ्जनं ।
मम हृदय–कञ्ज निवास करु कामादि–खल–दल–गञ्जनं ॥५॥

## पद ५

प्यारे दरसन दिज्यो ॥ तुमबिन रह्यो ना जाय ॥टेक॥
जल बिन कमल चंद बिन रजनि, ऐसे तुम देख्याँ बिन सजनी
आकुलव्याकुल फिरूँरैन दिन विरह कलेजो खाय ॥१॥
दिवसन भूख नींद नहि रैना मुखसूँ कथ तन आवत वैना ।
कहा कहुँ कछु कहत न जावे मिलकर तपत बुझाय ॥२॥
क्युँ तरसावो अंतरयामि आपमिलो किरपाकर स्वामी ।
मीरा दासी जनम जनमकी पडी तुम्हारे पाय ॥३॥

## पद ६

हरि तुम बहुत अनुग्रह कीन्हो ।
साधन-धाम विबुध-दुलभ तनु, मोहि कृपा करि दिन्हो ॥१॥
कोटिहुँ मुख कहिजातन प्रभुके एक एक उपकार ।
तदपि नाथ कछु और माँगिहो दीजे परम उदार ॥२॥
विषय-बारि मन-मीन भिन्न नहिं होत कबहुँ पल एक ।
ताते सहौं विपात्ति अति दारुण जनमत जोनि अनेक ॥३॥
कृपा-डोरी बनसी पद अंकुश परम प्रेम-मृदु-चारो ।
एहि विधि वेधि हरहु मेरो दुःख कौतुक राम तिहारो ॥४॥
हे श्रुति-विदितं उपाय सकल सुर, केहि केहि दीन निहारे ॥
तुलसीदास यहि जीव मोह-रजु जोई वीध्यो सोई छोरे ॥५॥

## पद ७

दो दिनका जग मेला सब चलाचलीका खेला. (२) टेक.

धन लाख करोड कमाया तेरे संगमें कछु न आया,
संग चले न एक अधेला, सब चलाचलीका खेला. दो० १

आज गया कोई जावे कोई गठडी बांध सीधावे,
कोई रहा अकेला अकेला सब चलाचलीका खेला. दो० २

मात पिता सुत भाई तेरे अंत सहायक नाहि,
क्युं भरे पापका थेला सब चलाचलीका खेला. दो० ३

नैश्वर्य हे संसारा कर भजन हरिका प्यारा,
ब्रह्मानंद कहे सुन चेला सब चलाचलीका खेला. दो० ४

## पद ८

प्रभु मेरे औगुन चित्त न धरो।
समदरशी प्रभु नाम तिहारो अपने पनहि करो ॥धृ०॥
इक लोहा पूजामें राखत इक घर बधिक परो।
यह दुबिधा पारस नहिं जानत कंचन करत खरो ॥१॥
एक नदिया एक नार कहावत मैलो नीर भरो।
जब मिलिकै दोउ एक बरन भए सुरसरि नाम परो ॥२॥
एक जीव एक ब्रह्म कहावत सूरस्याम झगरो।
अबकी बेर मोहिं पार उतारो नहिं पन जात टरो ॥३॥

## पद ९

### राग—बिहाग.

मधुकर शाम हमारे चोर ॥
मनहरणि नो माधुरी मूरत, निरख नयनकी कोर ॥१॥
पकरे हुते आन डर अंतर, प्रेम प्रीति के जोर ।
गये छुडाय तोर सब बंधन, दे गये हँसन अकोरे ॥२॥
आणु परी जागत निति बीते तारे गिनत भई मोर ।
सूरदास प्रभु हेत मन मेरो सर्वस्व ले गयो नंदकिशोर ॥३॥

## पद १०

बच्चा मत करना अभिमान ।
एक दिन निकल जायगा प्राण
रावण केरी संपत देखो फीरत लंकमें ढुंडी,
रामचंद्रका लगा झपाटा घुसउ गई दश मुंडी. बच्चा० १
दुर्योधनका वैभव देखो बारा हजारा हाथी,
भीमसेनकी लगी गदा जब नीकल गइ सब सुस्ती. बच्चा० २
सातहु बालक कंस मारके, मस्त भयो मथुरनमें,
बाळकृष्णका लगा झपाटा मिटी हो गई पलमें. बच्चा० ३
कहेत मछंदर सुनवे गोरख, मनुष्य देह नहि आवे,
जो नर संत चरण नहिं सेवे, सो नर गोथा खावे. बच्चा० ४

## पद ११

( राग—बागेश्वरी, ताल-त्रिताल. )

सब दिन होत न एक समान,
एक दिन राजा हरिश्चंद्र घर संपत्ति मेरु समान,
एक दिन जाय श्वपच ग्रह सेवत अंबर हरत स्मशान. सब० १
एक दिन सीता रुदन करत है महाबिपिन उद्यान,
एक दिन रामचंद्र दोउ मलिके, विचरत पुष्पविमान. सब० २
प्रगटत है पूरबकी करणी तज मन शोच अज्ञान,
तुलसीदास कहां लग बरनन विधि के अंग प्रमान. सब० ३



## अथ प्रज्ञाकरं हयग्रीव स्तोत्रम् ॥

प्राची संध्याकाचिदं तर्निशायाः प्रज्ञादृष्टरंजनश्रीर पूर्वा ॥
वंक्रीवेदान्यातु मेवाजिवक्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥१॥
प्रणताज्ञान संदोहध्वान्तध्वं सनकर्मकम् ॥
नमामि तुरगग्रीवं हार्सिारस्वत प्रदम् ॥२॥
श्लोकद्वयमिदं प्रात—रष्टाविंशतिवारकम् ॥
प्रयतः पठतेनित्यं कृत्स्ना विद्या प्रसिध्यति ॥३॥

॥ इति वेदांत देशिकस्वामी कृतं प्रज्ञाकरं हयग्रीव स्तोत्रं संपूर्णम् ॥

## संकटनाशनगणेशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच । प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुः कामार्थसिद्धये ॥१॥ प्रथमं वक्रतुंडं च एकदंतं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्रं चतुर्थकम् ॥ २ ॥ लंबोदरं पंचमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजेंद्रं धूम्रवर्णं तथाष्टमम् ॥ ३ ॥ नवमं भालचंद्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धि कर प्रभुः ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७ ॥ अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥ ८ ॥ इति श्रीनारदपुराणे संकष्टनाशनं नाम गणेशस्तोत्रं संपूर्णम् ॥

## सूर्याष्टकम् ।

श्रीगणेशाय नमः ॥ सांब उवाच ॥ आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर । दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तुते ॥ १ ॥ सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् । श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥ २ ॥ लोहितं रथमारूढं सर्वलोकपितामहम् ।

महापापहरं देवं तं सूर्यं० ॥ ३ ॥ त्रैगुण्यं च महा शूरं ब्रह्मविष्णु महेश्वरम् । महापापहरं देवं तं सूर्यं० ॥ ४ ॥ बृंहितं तेजःपुंजं च वायुमाकाशमेव च प्रभुं च सर्वलोकानां तं सूर्यं० ॥ ५ ॥ बंधूकपुष्प-संकाशं हारकुंडलभूषितम् । एकचक्रधरं देवं तं सूर्यं० ॥ ६ ॥ तं सूर्यं जगत्कर्तारं महातेजःप्रदीपनम् । महापापहरं देवं तं सूर्यं० ॥७॥ तं सूर्यं जगतां नाथं ज्ञान विज्ञानमोक्षदम् । महापापहरं देवं तं सूर्यं० ॥ ८ ॥ सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम् । अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत् ॥ ९ ॥ आमिषं मधुपानं च यः करोति रवेर्दिने । सप्तजन्म भवेद्रोगी जन्मजन्म दरिद्रता ॥ १० ॥ स्त्रीतैल-मधुमांसानि यस्त्यजेत्तु रवेर्दिने । न व्याधिः शोकदारिद्र्यं सूर्यलोकं स गच्छति ॥ ११ ॥ इति श्रीसूर्याष्टकस्तोत्रं संपूर्णम् ॥

## मंत्रपुष्पांजलि

## मंत्रपुष्पांजलि

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ॐ राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समंतपर्यायीस्यात् सार्वभौमः सार्वायुष

आंतादापरार्धात् पृथिव्यै समुद्रपर्यंताया एकराडिति । तदप्येषश्लोको-ऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥

## रामाष्टकम्

श्रीगणेशाय नमः ॥ भजे विशेषसुंदरं समस्तपापखण्डनम् । स्वभक्तचित्तरंजनं सदैव राममद्वयम् ॥१॥ जटाकलापशोभितं समस्तपापनाशकम् । स्वभक्तभीतिभंजनं भजेह राममद्वयम् ॥२॥ निजस्वरुपबोधकं कृपाकरं भवापहम् । समं शिवं निरंजनं भजे ह राममद्वयम् ॥३॥ सहप्रपंच कल्पितं ह्यनामरूपवास्तवम् । निराकृतिं निरामयं भजे ह राममद्वयम् ॥४॥ निष्प्रपंचनिर्विकल्पनिर्मलं निरामयम् । चिदेकरूपसंततं भजे ह राममद्वयम् ॥५॥ भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम् । गुणाकरं कृपाकरं भजे ह राममद्वयम् ॥६॥ महावाक्यबोधकैर्विराजमानवाक्पदैः । परब्रह्म व्यापकं भजे ह राममद्वयम् ॥७॥ शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम् । विराजमानदैशिकं भजे ह राममद्वयम् ॥८॥ रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेन भाषितमिदं शृणुते मनुष्यः । विद्यां श्रियं विपुलसौख्यमनंतकीर्तिं संप्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥ इति श्रीव्यासविरचितं रामाष्टकं संपूर्णम् ॥

## विज्ञाननौका ॥

श्रीगणेशाय नमः तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या । परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥१॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशांतं समाराध्य मत्या विचार्य स्वरूपम् । यदाप्नोति तत्त्वं निदिध्यास्य विद्वान्परं ब्रह्म० ॥२॥ यदानंदरूपं प्रकाशस्वरूपं निरस्तप्रपंचं परिच्छेदशून्यम् । अहं ब्रह्म-वृत्त्यैकगम्यं तुरीयं परं ब्रह्म० ॥३॥ यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे । मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म० ॥४॥ निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदा-भाति पूर्णम् । अवस्थात्रयातीतमेकं तुरीयं परं ब्रह्म० ॥५॥ यदा नंदलेशैः समानंदि विश्वं यदाभाति सत्त्वे तदाभाति सर्वम् । यदालोचने रूपमन्यत्समस्तं परं ब्रह्म० ॥६॥ अनंतं विभुं सर्वयोनिं निरीहं शिवं संगहीनं यदोंकारगम्यम् । निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म० ॥७॥ यदानंदसिंधौ निमग्नः पुमान्स्यादविद्याविलासः समस्त प्रपंचः । यदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म० ॥८॥ स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्ति भावो मनुष्यः । शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥९॥ विज्ञाननावं परिगृह्य कश्चित्तरेद्यद-ज्ञानमयं भवाब्धिम् । ज्ञानासिना यो हि विच्छिद्य तृष्णां विष्णोः पदं याति स एव धन्यः ॥१०॥ इति श्रीशंकराचार्यविरचिता विज्ञाननौका संपूर्णा ॥

# चर्पटपंजरिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ दिनमपि रजनी सायं प्रातः शिशिरवसंतौ पुनरायातौः । कालः क्रीडति गच्छत्यायुस्तदपि न मुंचत्याशावायुः ॥१॥ भज गोविंदं भज गोविंदं भज गोविंदं मूढमते । प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ्करणे ( ध्रुवपदम् ) । अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमार्पितजानुः । करतलभिक्षा तरुतलवासस्तदपि न मुंचत्याशापाशः । भज गो० ॥ १ ॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । पश्चाद्धावतिजर्जरदेहे वार्तां पृच्छति कोपि न गेहे । भज गोविंदं भज० ॥३॥ जटिलो मुंडी लुंचितकेशः काषायांबरबहुकृतवेषः । पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः । भज गोविंदं० ॥४॥ भगवद्गीता किंचिदधीता गंगाजललवकणिका पीता । सकृदपि यस्य मुरारिसमर्चातस्य यमः किं कुरुते चर्चां । भज गोविंदं भज० ॥५॥ अंगं गलितं पलितं मुंडं दशनविहीनं जातं तुंडम् । वृद्धोयाति गृहीत्वा दंडं तदपि न मुंचत्याशा पिंडम् । भज गोविंदं भज० ॥६॥ बालस्तावत्क्रीडासक्तस्तरुण स्तावत्तरुणीरक्तः । वृद्धस्तावच्चिंतामग्नः परे ब्रह्मणि कोपिनलग्नः । भज गोविंदं भज० ॥७॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे शयनम् । इह संसारे खलु दुस्तारे कृपयाऽपारे पाहि मुरारे । भज गोविंदं भज० ॥९॥ पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः ।

पुनरप्ययनं पुनरपि वर्षं तदपि न मुंचत्याशामर्षम् । भज गोविंदं भज० ॥९॥ वयसि गते कः कामविकारः । शुष्के नीरे कः कासारः । नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः । भज गोविंदं भज० ॥१०॥ नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम् । एतन्मांसवसादिविकारं मनसि विचारय वारंवारम् । भज गोविंदं भज० ॥११॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः । इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारं । भज गोविंदं भज० ॥१२॥ गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् । नेयं सज्जनसंगे चित्तं देयं दीनजनाय च वित्तम् । भज गोविंदं० ॥१३॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे । गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये । भज गोविंदं भज० ॥१४॥ सुखतः क्रियते रामाभोगः । पश्चाद्धंत शरीरे रोगः । यद्यपि लोके मरणं शरणं तदपि न मुंचति पापाचरणम् । भज गोविंदं भज० ॥१५॥ रथ्याचर्पटविरचितकंथः पुण्यापुण्यविवर्जितपंथः । नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः । भज गोविंदं भज० ॥१६॥ कुरुते गंगासागरगमनं व्रतपरिपालनमथवा दानम् । ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन । भज गोविंदं भज० ॥१७॥ इति श्रीमच्छंकराचार्यविरचितं चर्पटपंजरिकास्तोत्रं संपूर्णम् ॥

# नवग्रहस्तोत्रम् ।

श्रीगणेशाय नमः जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोऽरिंसर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥ दधिशंखतुषाराभं
क्षीरोदार्णव संभवम् । नमामि शशिनं सोमं शंभोर्मुकुटभूषणम् ॥ २ ॥
धरणीगर्भसं भूतं विद्युत्कांति समप्रभम् । कुमारं शक्तिहस्तं च मंगलं
प्रणमाम्यह ॥ ३ ॥ प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधम् । सौम्य
सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥ देवानां च ऋषीणां च
गुरुं कांचनसन्निभम् । बुद्धिभूतं त्रिलोकस्य तं नमामि बृहस्पतिम्
॥ ५ ॥ हिम कुंदमृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं
भार्गवं प्रणमाम्यहम् ॥ ६ ॥ नीलांजनसमाभासं रविपुत्रं यमाग्रजम् ।
छायामार्तंडसंभूतं तं नमामि शनैश्चरम् ॥ ७ ॥ अर्धकायं महावीर्यं
चंद्रादित्यविमर्दनम् । सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥ ८ ॥
पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं घोरं तं केतुं
प्रणमाम्यहम् ॥ ९ ॥ इति व्यासमुखोद्गीतं यः पठेत्सुसमाहितः ।
दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ॥ १० ॥ नरनारीनृपाणां
च भवेद्दुःस्वप्ननाशनम् । ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥ ११ ॥
ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः । ताः सर्वाः प्रशमं यान्ति
व्यासो ब्रूते न संशयः ॥ १२ ॥ इति श्रीव्यासविरचितं नवग्रह-
स्तोत्रं संपूर्णम् ॥

## नवनागस्तोत्रम् ।

श्रीगणेशाय नमः ।। अनंतं वासुकिं शेषं पद्मनाभं च कंबलम् । शंखपालं धृतराष्ट्रं तक्षकं कालियं तथा ।। १ ।। एतानि नव नामानि नागानां च महात्मनाम् । सायंकाले पठेन्नित्यं प्रातःकाळे विशेषतः । तस्य विषभयंनास्ति सर्वत्र विजयी भवेत् ।। २ ।। इति श्रीनवनाग स्तोत्र संपूर्णम् ।।

## आत्मषटकस्तोत्रम्

मनोबुद्धयहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योम भूमीनतेजो न वायुश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ।।१।। अहंप्राणवर्गो न पंचानिलामे न तोयंनमेधातवो नैवकोशाः । नवाक् पाणिपादौ न चोपस्थपायूचिदानंदरूपः शिवोऽहं शिवोऽहम् ।। १ ।। नमे द्वेषरागौ नमे लोभमोहौ मदोनैवमेनैवमात्सर्यभावः । न धर्मो न चार्थो न कामो नं मोक्षश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ।। ३ ।। न पुण्यं न पापं न सौख्यं न दुःखं न मंत्रो न तीर्थं न वेदा न यज्ञाः । अहं भोजनं नैवभोज्यं न भोक्ताचिदानंदरूपः शिवोऽहं शिवोऽहम् ।।४।। नमे मृत्युशंका नमे जातिभेदः पितानैवमेनैवमाता न जन्म । न बन्धुर्न- मित्रंगुरुर्नैवशिष्य श्चिदानंदरूपः शिवोऽहं शिवोऽहम् ।। ५ ।। अहं निर्विकल्पो निराकाररूपो विभुर्व्याप्य सर्वत्रसर्वेन्द्रियाणि । सदामे समत्वं न मुक्तिर्नबन्ध श्चिदानंदरूपः शिवोऽहं शिवोऽहम् ।। ६ ।।

---

|| सत्यमेव जयते ||




अयमात्माब्रह्म

## परमात्म्यध्यान

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्महृदाय आदिकवये मुह्यन्तियत्सूरयः ॥
तेजोवारि मृदां यथा विनिमयो यत्र त्रिसर्गोमृषा ।
धाम्नास्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥
कस्मै येन विभासितोऽयमतुलो ज्ञानः प्रदीपः पुरा ।
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥
योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यतः ।
तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ श्री. भाग०

असितगिरिसमंस्यात्कज्जलं सिन्धुपात्रे ।
सुरतरुवरशाखा लेखिनी पत्रमुर्वी ॥
लिखति यदि गृहीत्वा शारदा सर्वकालं ।
तदपि तव गुणानामीश पारं न याति ॥

ॐ " तत सत " " सोऽहम "